श्री गणेशायनमः ॥

# अथ पकावली ग्रन्थम्

## अथ गोक्षुर पाकः

प्रस्थं गोक्षुर सूक्ष्मचूर्ण मृदितं दुग्धाढ़के पाचयेत् ॥
जातीपत्र लवंग लोह मरिचं कर्पूर माकल्करं ॥
अब्धेःशोषमजाजि युग्मरजनी धात्रीकणा केशरम् ॥
चातुर्जात मथाहि फेनकसठी शुंठी कुबेराक्षकम् ॥ १ ॥
कांतमभ्ररसेन्द्र वङ्ग सहितं भस्मं च कर्षोऽन्वितम् ॥
तुल्यंशर्करयातदर्ध विजया प्रस्थार्धकं गोघृतं ॥
युक्तं वैद्यवरेण निर्मितमिदं मृद्वाग्निना पाचितम् ॥
प्रातर्सेवितमौषधं चमनुजैर्व्योधेश्च विध्वंसनं ।
कर्षार्धेन च सर्वमेह शमनं प्रौढ़ांगना द्रावकम् ॥ २ ॥
वीर्यस्तंभनतुष्टि पुष्टि करणं वाजीकरं कामिनाम् ॥
उच्चैर्गर्जति काननेमृगपतिः तत्तत्सदा सेवितम् ॥ ३॥

इतिगोक्षुर पाकः

### गोक्षुर पाकः

गोक्षुरं स्यात्पल शतं गुरुणा मभयाशतम् ॥
नृपवृक्षतदर्धं वा तदर्ध चामल की रसम् ॥ ४ ॥
निर्झरं केतकी काष्ठं कुष्ठं यष्टी च तत्समम् ॥
एरण्ड वृक्षमूलं च उशीरम भयांशकम् ॥ ५ ॥

चतुर्गुणेऽम्भसिक्काथ्य मष्टा शंवश गालितम् ।
घृतस्यकुडवंदद्यात् तुलामात्रं गुडस्य च ॥ ६ ॥
षष्टी फलत्रयं कृष्णा अश्मभेद त्रिकंटकैः ।
कौतीवासक दुस्पर्शात्रिसुगंधिशिला जतु ॥ ७ ॥
यथाभ्रजं च लोहं चकल्कयेश्च पलं पलम् ।
पलानिषोडशद्राक्षा शिशिरे दापयेद्भिषक् ॥ ८ ॥
प्रातःकालेऽवलेहंतुप्रपिबेत्तण्डुलाम्बुना ।
मूत्रकृच्छ्रं मूत्ररोधं मूत्राघात मथाश्मरीं ॥ ९ ॥
सदाहं वेदना युक्तं रक्त दोषं तथैव च ।
प्रमेहंमधुमेहं चनाशयेच्च चिरोद्भवम् ॥ १० ॥
॥ इति गोक्षुरकावलेहः ॥



लाजा पाकः

क्षीरद्रोण युतं सुशालि कुडवंमंदाग्निना पाचितम् ।
यावत्पाकमुपाचितं परिहितंप्रस्थं गुडंनिक्षिपेत् ॥११॥
चातुर्जात लवंगजातिफलयोः मुस्ता तुगा धान्यकम् ।
शुंठीमागधिकोषणाभ्रिमभया लोहश्चमि श्री कृतम् ॥
हृद्रोगक्षय कासमेहशमनं हिक्कासृजः शोषणम् ।
तृष्णादाह निवारणं चशमनं छर्दैः सुखंप्राणिनाम् ॥ १२ ॥
॥ इति लाजापाकः ॥

अश्वगंधे पाकः

अश्वगंधा प्रस्थ मेकं क्षीर द्रोण द्वये पचेत् ।
घृतं प्रस्थ मितं चैव खण्ड प्रस्थत्रयं तथा ॥ १३ ॥

प्रस्थार्धं च तिला माषा विपचेन्मृदुवन्हिना ।
व्योषत्रिजात इक्षुवाशताह्वा चशतावरी ॥ १४ ॥
दीप्यं च पौष्करं जाती शुंठीगोक्षुरकंवला ।
यवानी मथिकंलोहं नागं सुल्वं पलं पलम् ॥ १५ ॥
सर्वान्वातामयान्हन्तिकटि पृष्ठ गुदस्थितान् ।
अस्थि भंगं तथा शोफं संधि वातं सुदारुणम् ॥ १६ ॥
बध्र्महृद्रोगप्लीहानि श्वास कास प्रमेहनुत् ।
अश्वेभानां हितंयेन कांति पुष्टि वलप्रदम् ॥ १७ ॥

॥ इत्यश्व गन्धा पाक ॥

कुवेर पाकः

कुवेर प्रस्थ मादाय क्षिप्त्वारात्रौ चतुर्गुणे ।
क्षीरेप्रातः पचेत्सम्यक् घृतेन मृदुवह्निना ॥ १८ ॥
शीतीकृत्य सुनिष्पन्ने मधुप्रस्थं विनिक्षिपेत् ।
चतुर्जातं त्रिकटुकं च जाती पत्री फलं तथा । १९ ॥
देवपुष्पं विडंगं च मिशिजीरबला घनम् ।
निशाद्वयं तथा लोहं शुल्वंवंगंपलार्धकम् ॥ २० ॥
प्रत्येकं चूर्णितं क्षिप्त्वा भक्षयेच्चपलंवुधः ।
सर्वान्वातामयान् शूलमग्निमाद्यं वलक्षयम् ॥ २१ ॥
प्रमेहं मूत्र कृच्छ्रं च अश्मरीं गुल्म पाडुनुत् ।
पीनसंग्रहणी दोषमतीसार मरो चकम् ॥ २२ ॥

इत्यात्रेयान्मधु पक कुवेरः

अथ पञ्चवास पाकः

कुवेर प्रस्थमेकं च पचेत्क्षीरे चतुर्गुणे ।
घृत प्रस्थ समा युक्तं पचेच्चमृदु वह्निना ॥ २३
सांद्री भूतेक्षिपेत्तत्र मधु प्रस्थार्धं मेवच ।
स्निग्ध भांडे विनिक्षिप्य खण्ड प्रस्थ त्रयं क्षिपेत् ॥ २४
चातुर्जातं लवङ्गं च पिप्पली च पुनर्नवा ।
नागार्जुनी स्वगुप्ता च गोक्षुरं पिचुमात्रकम् ॥२५॥
मंजिष्ठावाजिगंधानामक्षमात्रं तथैव च ।
आकल्करंतथाकर्षं गुडं शुद्धं पलाष्टकम् ॥ २६
निर्गुंडी बेडकं मूलं पलमात्रं तथैव च ।
नागबला समेतं च बंगाभ्रक समंतथा ॥ २७
कर्पूरशाणकार्धंच धारा सत्वं तथैवच ।
तवक्षीरं मस्तकी च पलार्धं च प्रकल्पयेत् ॥ २८
वालकं चंदनं मांसी कर्पूरं बंश लोचनं ॥
जाती फलं जाति पत्री केशरं चंदनं तथा ॥ २९
पलमात्रं प्रदातव्यं महा व्याधि हरो विधिः ।
श्वासं कासं तथा पांडुं प्रमेहं च विनाशयेत् ॥ ३०
योनि दोषं रजो दोषं प्रदरं पञ्चघातथा ।
बहुमूत्रं भवेद्यस्य प्रणश्यति न संशयः ॥ ३१

क्षीणां च कुरुते पुष्टिं बालानां चांग वर्धनं ।
बलं वीर्य करं पुंसां पड़ बासं गुणोत्तमम् ॥३२

॥ इति पडवास पाकः ॥

॥ नानी मायींति लोके प्रसिद्धः ॥

अथात्मगुप्तावलेहः

आत्म गुप्ता प्रस्थमेकं चाश्वगंधा सशालकः ।
श्वदंष्ट्राऽति बला गुप्ताह्विरः पडबासकः ॥ ३३
प्रत्येकं कुड़वंत्वेभ्यस्ति तास्त्वष्ट पलानितु ।
चातुर्जातं स कटुकं जातीपत्री कुवेरकम् ॥ ३४
जाती फलंलवंगेन्दु तगरं मुशली निशां ।
आकल्क धान्य जीराब्धि निशामासी फलत्रयम् ॥ ३५
हवुषा पुष्करं दीप्यं प्रत्येकं चूर्णितं पलं ।
तुगालोहाभ्र बंगानां प्रत्येकं द्विपलं क्षिपेत ॥ ३६
पलं पादं मृतं ताम्र महिफेन पलंतथा ।
बिजया फल शुध्यं तु पक्वा चार्ध पलं भजेत् ॥ ३७॥
बिषमेह श्वास कासं च पाण्ड्वर्शोबल संक्षयं ।
बात व्याधि मुरुस्तंभं हिक्कां शोफं कटि ग्रहम् ॥ ३८
शूल हृद्रोग मांद्यत्वं कफ पीनस नाशनः ।
प्रदरं हंति बेगेन वीर्य बृद्धि करं बर्था ॥ ३९
आत्म गुप्तावलेहोऽयं मधुरश्च रसायनम् ॥ ४०

॥ इत्यात्म गुप्तावलेहः ॥

एरंड पाकः

वातारि बीज प्रस्थंतु सुपक्वं निस्तुषी कृतम् ।
क्षीर द्रोणार्द्धं युक्तं तत् भिषग्मन्दाग्निना पचेत् ।। ४१
त्र्यूषणं स चतुर्जा तं ग्रन्थिकं वह्नि चव्यकम् ।
छत्रा मिशिसठी बिल्व दीप्यौजीरे निशायुगं ।। ४२
अश्वगन्धा बलापाठां हवुषावेल्ल पुष्करम् ।
श्वदंष्ट्रा रुग्बरादारुवेल्लर्या वालुकावरी ।। ४३ ।।
एतानिपिचुमात्राणि चूर्णितानि विनिक्षिपेत ।
वातव्याधि भूतशूलं शोफं वृद्धि तथोत्तरम् ।। ४४ ।।
आनाहं बध्मं हृद्गुल्म मामवातं कटिग्रहम् ।
उरुग्रहं तथा हिध्मा श्वासं कासं हृदामयम् ।।४५।।
अर्दिताक्षेप विश्वाची गृध्रसी त्वप तंत्रकम् ।। ४६।।

।। इत्येरंडपाकः ।।

लशुनपाकः

निस्तुषं लशुनं प्रस्थं क्षीरकुम्भे पचेत्सुधी ।
घृतमान्या समेतं च विपचेन्मृदु वह्निना ।। ४७ ।।
सुनिष्पन्ने मधुनिभेखंडं प्रस्थद्वयं क्षिपेत् ।
त्र्यूषणं च चतुर्जातं ग्रन्थि वह्निं स चव्यकम् ।।४८।।
विडंगं रजनी युग्मं हवुषा वृद्धदारुकम् ।
पौष्करं दीप्यकं कुष्टं सुरदारु पुनर्नवा ।। ४९ ।।
श्वदंष्ट्रातिवला रास्ना शतपुष्पा वरीशठी ।
अश्वगन्धात्मगुप्ता च द्रव्याणि पिचुमात्रया ।।५०।।

भुक्त्वा यथाबलं सेव्यो रसोनाख्य रसायनम् ।
सर्वान्वाता मयान्शूल मपस्मारमुरः क्षतम् ॥ ५१॥
गुल्मोदर बमिलीह वर्ध्मवृद्धि कृमिञ्जयेत् ।
विबंधा नाहशोफांश्च वह्निमांद्यं बलक्षयम् ॥५२॥

॥ इति लशुन पाकः ॥

कूष्माण्ड पाकः

कूष्मांड कात्पलशतं क्षीर द्रोणद्वयेपचेत् ।
प्रस्थार्धं तु घृतं गव्यं तस्मिंस्तत्प्रदापयेत् ॥ ५३ ॥
विश्वाह्व जीरककणा पल षट्क युक्तं ।
त्वङ्नाग पुष्प त्रुटि पत्र पलद्वयेन ॥
एतत्पुराण मधुनः कुडवद्वयेन ।
संयोजितं जयति जंतुषु रक्तपित्तम् ॥५४॥
ऊर्ध्वं प्रवृद्धमपि गुह्य गुदप्रवृद्ध ।
मस्मात्परं तु विभवेदपरं न हृद्यम् ॥
मूत्रस्यकृच्छ्रमरुचिं चवमिं च तृष्णा ।
मूर्च्छामपस्मृति मुरः क्षत मूर्ध्ववातं ॥
उन्मादमाद्यं हृच्छूल वृष्यमशेष वातान् ।
रक्तात्मकं चलगदैर्विदधीनबुद्धिः ॥ ५५ ॥

इति कूष्मांण्ड पाकः

कूष्माण्डावलेहः

निष्कुली कृत कूष्मांडखण्डानि परि कल्पयेत् ।
कांजिके न सुधौतानि पुनरेव जलेन च ॥ ५६ ॥

पश्चात्क्षीरस्य द्रोणार्धं पुनरेव च कल्पयेत्।
घृतेनैव च तां शुद्धां पाचयेत्सुविधानतः ॥ ५७ ॥
यथा मधुनिभः पाकः तदा शर्करया तथा।
निवाय तत्र चेमानि भेषजानि प्रकल्पयेत् ॥ ५८ ॥
पिप्पली शृङ्गवेराभ्यां द्वेपले मुस्तधान्यकम्।
जीरके द्वे तथा धात्री त्वगेला पत्रकेशरम् ॥ ५९ ॥
एतदर्धेन युंजीत चूर्णं तत्रविनिक्षिपेत्।
दर्व्या संघट्टयेत्तावत् या वलेहत्वमाप्नुयात् ॥ ६० ॥
उरःसंधान जननं च बृंहणं स्वर बोधनम् ॥ ६१ ॥

इति द्वितीय कूष्माण्डावलेहः ॥



कूष्माण्डावलेहः

कूष्मांडात्पलशतं सुस्विन्नंनिष्कुली कृतम् ॥
प्रस्थं चैव घृताद्देयं तस्मिंस्तप्ते प्रदापयेत् ॥ ६२ ॥
त्वक् पत्रधान्यकं व्योषं जीरकैलाद्वयानलम् ॥
ग्रन्थिकं चव्य मातंगकेशरं वंशरोचना ॥ ६३ ॥
सौंहाणकं केशरं च मुशलीकंद मुस्तकम् ॥
चूर्णीकृतं पलांशेनगुडस्य तुलयापचेत् ॥ ६४ ॥
कफपित्तानिलहरं मन्दाग्नीनां च पाचनम् ॥ ६५ ॥

इति कूष्मांडावलेहः

आर्द्रकावलेहः

प्रस्थंगुडस्यार्द्रकवारि चाढ़कं श्लक्ष्णीकृतं पावकमंदपकम् ॥
दर्वी प्रलेपाज्जड़वत्प्रमाणं तथाचतुर्जात लवंगव्योषम् ॥ ६६

खादेत्प्रभाते ऽग्निबलप्रमाणं । क्षुधाकरं मारुत मर्दनं च ॥ ६७

इत्यार्द्र कावलेहः

खंडकाद्रावलेहः ।

सुस्विनाच्छृंगवेरात्पल शत मनिशं निस्तुषं संविधाय ॥

तद्द्राक्षपेण पक्त्वा पलशतसहितं शुद्धखंडाद्व कायाः ॥

कौरङ्गीदेव पुष्पं मवकदलकणा नाग किंजल्क भङ्गम् ॥

शुक्राराजी सधान्या ।

मरिचशिखितुगा सार्धकर्षद्वयास्युः ॥ ६८ ॥

द्रोणेनीरे निधाय ज्वलन ।

मुपगतं पात्र मुत्तार्य यत्नात् ॥

दर्व्या संघट्टयित्वा शिशिरसुरभितं ।

चूर्णितं श्चावि चूर्णम् ॥

प्रातः शीतेसुपक्के मधुकुड़वयुतं ।

मिश्रयित्वा च वातम् ॥

प्रस्थंतद्भक्षयित्वा प्रहरति सकलं ।

रोगराज्यं स सैन्यम् ॥ ६९ ॥

इति खंडकाद्रावलेहः

आर्द्रकावलेहः

दशमूल वचाधान्य मागधीमूलपौष्करम् ।

पर्पटं भद्रमुस्ता च त्रायमाणं च रोहिणी ॥ ७० ॥

त्र्यूषणं पिप्पली मूलं श्रङ्गी भार्ङ्गी पटोलकम् ।

रोहिषं च वृषा मुस्ता विश्वदारु पुनर्नवा ॥ ७१ ॥

दहनं शतपुष्पं च श्रृंगी गजकणा तथा ।

द्विपलाशानि सर्वाणि श्रृतेचाष्ट गुणे जले ॥ ७२ ॥
तेन पादावशेषेण रसं संग्राह्य चोत्तमम् ।
आर्द्रकस्यतुलार्धं तु रसस्य द्विगुणं जलम् ॥ ७३ ॥
प्रस्थं गव्यं घृतं दद्यात् विप चेच्च सुखाग्निना ।
कटुत्रिकं चतुर्जातं लवंगं जाति पत्रिका ॥ ७४ ॥
कल्कैरेभिश्च दार्व्यं बुलशीरं चपलं पलम् ।
तस्यार्धः खादिरः सारः सर्वमेकत्र कारयेत् ॥ ७५ ॥
विधिनाथ विपक्कंतु सर्व व्याधि विनाशनम् ।
पंच कासं तथा श्वासं हिक्कां च विषम ज्वरम् ॥ ७६
वन्हि दीप्तिं चकुरुते तेजो वृद्धि करस्तथा ।
दुर्नामाकुष्ठ रोगेषु हंति सूर्योदयस्तमः ॥ ७७

॥ इत्यार्द्रकावलेहः ॥

शुंठ्यावलेहः

नागरस्य पलान्यष्टौ गुडस्य पल षोड़सम् ।
घृतं च कुड़बंदद्याद् दुग्धाष्ट कुड़वं तथा ॥ ७६
जाती फलं लवंगं च चातुर्जातक मेवच ।
त्र्यूषणं चित्रकं चैव कर्षं कर्षं प्रयोजयेत् ॥ ७८
स्थापयेन्मृन्मये पात्रे मंदानिलविपाचितम् ।
स्वांग शीतलमुद्धृत्य मधुना कुड़बंक्षिपेत् ॥ ८० ॥

॥ इति शुंठ्यावलेहः ॥

खंड शुंठ्यावलेहः

नागरस्थं तुलामेकां घृतस्य पल विंशतिः ।
क्षीर द्रोणार्धके पक्त्वा खंडस्यार्धशतंक्षिपेत् ॥ ८१

व्योषं त्रिजातकं चैवपिप्पली मूल लवंग केशरम् ।
जोंगकं जाति पत्री च आतीफलक चोरकम् ॥ ८२
अश्म भेदस्ताम्र भस्म अभ्रक मेव च ॥
संमर्द्या यामभभ्रं च तथा लोहत्रयं क्षिपेत् ॥ ८३
एतान्पृथक् पलान्भागान्प्रत्येकं चूर्णितंक्षिपेत् ।
मंदानल विपक्वकं तुलेहवत्साधुसाधयेत् ॥ ८४
वल्यं वर्णं तथा पुष्यं बलीपलित नाशनम् ।
आमवात प्रशमनं सौभाग्य करमुत्तमम् ॥ ८५

॥ इति खंड शुंठ्यावलेहः॥



भल्लातक पाकः

भल्लातकं चतुः षष्ठी दुग्ध पक्वं च तत्समम् ।
दुग्धाच्चतुर्गुणंवारिक्वाथं च परिशोषितम् ॥ ८६
दुग्धार्धं च घृतं योज्यं घृतार्धं चैव शर्करा ।
मधु धात्री सिता तुल्ये सिद्धार्थमभयारजः ॥ ८७
मृत लोहं गुडूची स्यात् प्रत्येकम भयार्धकम् ।
तत्सर्वं दापयेद्भाण्डे धान्य राशौनिवेशयेत् ॥ ८८
सप्तरा त्र्यात्समुद्धृत्य खादेन्निष्कं त्रयंत्रयम् ।
भल्लातका मृतं नाम हंति वातात्मकं किल ॥ ८९॥
सर्वोपद्रव संयुक्त मग्नि नाश समन्वितम् ।
कुष्ठं मेहं खुडं क्षीणं बात पाण्ड्वामयं ज्वरान् ॥ ९०

मूत्रकृच्छ्राश्मरी शोष गुल्म श्वयथु विद्रधी ।
सर्व रोगाञ्जि हंत्याशु काम सेवी नरोभवेत् ॥ ९१

॥ इत्यामांत भल्लातकः ॥

भल्लातकानां पवनोत्थितानां, तरुच्युतानां च यदार्द्रकं स्यात् ।
घृष्ट्वेष्टिका चूर्ण कणैर्जलेन, प्रक्षाल्य शोष्यं शिवमारुतेन ॥
शुष्कान्पुनस्तान्वि दलीकृतांच, विपाचये दप्सु चतुर्गुणेन ।
पादावशेषं परिपूत शोषं, क्षीरेण तुल्येन विपाचयेत ॥९२
तत्पाद शिष्टं पुनरेव शीतं, घृतेन तुल्येन विपाचयेच्च ॥
तदर्धयाशर्करयाविमिश्रितं । ततः खजेनोन्मथितं विधाय ॥ ९३
सत्र्यूषणं त्रैफल चंद्रमासी । त्रिजात वांशीखदिरामृतं च ॥
सचंदना कल्क कणा विदारी । जातीफलं मुस्तकजातिपत्री ॥
कुबेर जीरा गुरु साब्धि शोषं । मेदाह्वयंलोह रसेन्द्र युक्तम् ॥
बंगं तथा कुंकुमकं च कर्षं । ९४ ॥
कंकोल मायाह्वयदीप्य युग्मं । नतंसमातङ्ग कणा विदारी ॥
तत्सप्त रात्रादपि जात वीर्यं । सुधार सादप्यधिकं वदन्ति ॥९५
प्रातर्प्रबुद्धः कृतदेव कार्यो । मात्रां भजेत्सात्म्य शरीर योग्यां ॥
नचान्नपाने परिहार्य मस्ति । न चातपेनाध्वनि मैथुने च ।
यथेष्ट चेष्टो विचरेत्प्रयोगा । नरोभवेत्कां चनराशि गौरः ॥
अनल्प मेधानर सिंहवीर्यो । दृढेन्द्रियोव्याधिगतः सुबुद्धिः ॥ ९६
दंताविशीर्णा पुनरे व दिव्या ।
केशाश्चशुभ्रा पुनरेवकृष्णाः ॥

नीलांजनालि प्रति मा भवन्ति ।

त्वचोविशीर्णः पुनरे वभव्याः ॥

विशीर्णकर्णागुलिनासिकोऽपि ।

कृम्यार्दितोभिन्नगलोऽपिकुष्ठी ॥

सोऽपि क्रमादं कुरिताग्रशाखः ।

तरुर्य थाभातिनवाम्बुसिक्तः ॥ ९७

पुष्टा न्मयूराञ्ज यति स्वरेण ।

बलेन नागास्तुरगा ञ्जवेन् ॥

रसाय नस्यास्य नरः प्रयोगाद् ।

वृहस्पतेरप्य धिकश्चवुध्या ॥ ९८

ग्रंथं विशालं पुनरुक्तदोषं ।

गृह्णातिशीघ्रंखलु तथ्यमेतत् ॥

कुर्वन्नमु कस्यमनल्प वुद्धिः ।

जीवन्नरो वर्ष शतानि पंच ॥ ९९

राजान मुग्रं च रसायनानां ।

चकारयोगं भगवानगस्त्यः ॥

अर्क द्रुमाधारित हीन शाखा

तर्पयथा भल्लकृतेसभक्तया ॥ १००

इत्यमृत भल्लातकः ॥

पूगी पाकः

हेमाम्भोधर चंदनं त्रिकुटुकं ।

धात्री पियाला कुहू ॥

मज्जा श्रीणिसुगंधजीरक रजः ।
शृंगाटकं वंशजम् ॥
जातीकोश लवंग धान्यक युतं ।
प्रत्येक कर्ष द्वयम् ॥
हव्यंगोः कुडवं सिताधं तुलया ।
धात्री बराह्यंजली ॥ १०१ ॥
पूगस्याष्ट फलं उलूख लवरे ।
संकुट्य चूर्णी कृतम् ॥
क्षीरस्याढ़क संयुतं नियमितं ।
मंदाग्नि नातत्पचेत् ॥
से व्यंतद्वासरादौ ज्वरमद सदने ।
दाह शूलाम्ल पित्ते ॥
विंशन्मेहनि पीड़िते क्षयतमः ।
श्वासादि युक्ते नरे ॥ १०२ ॥
नासास्यास्य गुदां त्रवाहिरुधिरं ।
यद्रो मकूपोद्भवम् ॥
रेतो व्याधि हरं रसायन मिदं ।
गर्भ प्रदं योषिताम् ॥ १०३ ॥

॥ इति पूगी फल पाकः ॥

गंगाधर पाकः

श्वेतांग सल्ली सहकार वल्ली ।
स्याज्जम्बु सल्ली रहविल्ववल्ली ।

स्यान्मो च सल्ली भजमाख्य सल्ली ।

सदाड़िमी वल्कल संयुता नाम् ॥ १०४ ॥

संपीड्य सर्वंत्वथ तंडुलाम्बुनि ।

ततो विधेयं सुदृढं सुपिण्डम् ॥

तं जंबुपत्रे प्रथमं विवध्य ।

सूत्रेण सम्यक् त्वथबेष्ट येत्तत् ॥ १०५ ॥

वेष्टयेत्तदनु मृत्स्नया त्रिधातत ।

पचेतदनु शोष्य च गोलकं स्यात् ॥

रत्तिमात्रमथ भूमि रत्नके ।

प्रज्वालयेत्तदनु चंडसुवह्निनाच ॥ १०६ ॥

ऊर्ध्वरेत्तदपि चाग्नि शीतलम् ।

वस्त्र पूतमिद मेव कारयेत ॥

पीतमात्रमपि चामातिसारं ।

नाशयत्यपि च क्षौद्रमिश्रितम् ॥ १०७ ॥

सकर्वूर मेचकत्तैलवर्णं ।

शैवाल पूर्ण फलपूरकाभम् ।

सशैवलाभं वहुधाप्रकारं ।

तथातिनीलं घृतमांसकाभम् ॥ १०८ ॥

प्रवाहरूपंसकलातिसारं ।

रुणद्धिचानेन नहि संशयोत्र ॥

तृष्णार्तछर्दि ज्वर दाह युक्तं ।

मूर्च्छातुरंशोष युतं विवर्ज येत् ॥ १०९ ॥

गंगाधरोऽयंपाकाख्यः । प्रोक्तः प्राक्ऋषिभिःशुभः ।
विचार्यानेकशास्त्राणि पिंडितं नात्र पूजितम् ॥ ११० ॥

॥ इतिगङ्गाधर पाकः ॥

अहिफेनावलेहः

शुद्धाहिफेनकुड़वक्षीर द्रोणे पचेत्समम् ।
घृतमान्या समेतं चततो मृद्वाग्निनापचेत् ॥ १११ ॥
सुशीतेशर्करा प्रस्थंतत्रदद्याद्भिषग्वरः ॥
जाती फलं लवङ्ग च जातिपत्री च केशरम् ॥ ११२ ॥
अकल्कराविघशोषं चकर्पूरं चंदनं तथा ।
व्योषंकनकवीजानितगरं मुशलीतथा ॥ ११३ ॥
रक्तं च चविकाकेशी कुबेराक्षंसचित्रकम् ।
ग्रन्थिजीरंतथादीप्योबला गोक्षुर गुंद्रकम् ॥ ११४ ॥
द्रव्याणि पिचुमात्राणि चूर्णतानि विनिक्षिपेत् ।
विजयाकुडवं चैव तत्रदद्याद्भिषग्वरः ॥ ११५ ॥
बङ्ग शुद्धंतथालो हंपारदं चाभ्रकं तथा ।
पलमात्रं क्षिपेत्सर्वं शुद्धं दद्यात् भिषक्सुघीः ॥ ११६ ॥
मृगनाभ्या गरुभ्यांच वासितो मिश्रितस्तथा ।
सुनिष्पन्नोवलेहस्तुस्थाप्यो वैशुभभाजने ॥ ११७ ॥
माहिषं च पिवेद्दुग्धंभर्क्षयित्वा नरोनिशि ॥
अनेन सेव्य मानेन गच्छे न्नारीशतं नरः ॥ ११८ ॥
गर्भं चलभते वंध्या षंढोऽपि पुरूषा यते ।
पुत्रमाप्नोत्यपुत्रस्तु नरोजीवेत्समाशतम् ॥ ११९ ॥

॥ इत्याहिफेनावलेहः ॥

विजया पाकः

विजया जंरजः शुद्ध तुलामात्रं प्रदापयेत् ।
क्षीर गव्यं तुलार्धं तुशनै मृद्वग्निनापचेत् ॥ १२० ॥
उत्तार्यशीतलं कृत्वा खंडाच्चपल त्रिंशकम् ।
चातुर्जातलवंगं च व्योषमा कल्कलं तथा ॥ १२१ ॥
जातीफलं जातिपत्री अश्व गंधा पुनर्नवा ।
नागार्जुनी च गुप्तानांवलाना च पलार्द्धकम् ॥१२२॥
पलार्धमुपभुक्तं हि धातु पुष्टिकरंनृणाम् ।
प्रमेहव्याधि शमनं बहुवीर्य करंनृणाम् ॥ १२३ ॥

इति विजया पाकः



अगस्त्य हरीतकी

हरीतकी शतं भद्रं यवाना माढ़कं तथा ।
पलानि दशमूलानां विंशतिश्च नियोजयेत् ॥ १२४
चित्रकः पिप्पली मूलं अपामार्गः सठीतथा ॥
कपिकच्छुः शंख पुष्पी भार्गी च गज पिप्पली ॥ १२५
बला पुष्कर मूलं च पृथक् द्विपल मात्रया ।
पचेत्पं चाढ़के नीरे यवैस्विन्ने श्रृतंनयेत् ॥ १२६ ॥
तथा भयाशतं दद्यात् काथेतस्मिन्वि चक्षणः ।
पलाष्टकं तैल घृतेक्षिपेद्गुड़ तुलां तथा ॥ १२७
पक्वालेह त्वमानीय सिद्धेशीते पृथक् पृथक् ।
क्षौद्रं च पिप्पली चूर्णं दद्यात्कुडवमा त्रया ।

हरीतकी द्वयं खादेत्तेन लेहेन नित्यशः ।
क्षयं कासं ज्वरं श्वासं हिक्काशोंऽरुचिपीनसाम् ॥
ग्रहणी नाश येदेषवलीबलित नाशनः ॥
वल वर्ण करः पुंसामवलेहो रसायनम् ।
विहितोऽगस्त्यमुनिना सर्वं रोग प्रणाशनः ॥

इति अगस्त्य हरीतकी

महाराज वल्लभ तैलम्

महा नारायण प्रोक्तां कोलादि काथ एकशः ।
बलामूलकषायस्य दशमूल भवस्यच ॥
यव माष कुलत्थानां काथश्च पयसस्तथा ।
दधिमस्त्वमृता भीरुकाथा दित्यष्ट तैलतः ॥
भागश्चनवमः स्वर्ण निगुण्ड्यपर्करसत्रयः ।
कल्कोविदारि सरल देवदारु शटीसर्वं ॥
मंजिष्टा गुरुपीताभ चंदनं सित चंदनम् ।
उशीरं पद्मकं मुस्ताति विषा नाग पत्रकम् ।
जाती कोषफले चोग्राफल त्रय हरेणुका ॥
शारिवा नखरो मांसी चातुर्जातं लवङ्गकं ।
कंकोलंतगरं श्यामा चित्रपर्णीचतुष्टयम् ॥
जयंत्येरंडस द्रास्ना यष्ठीदमनकोत्पलम् ।
शठी चरक पारीश नलिका कुष्टशैलजं ॥
पुनर्नवा शताह्वा चाश्वगंधा सैर्यं कत्रयम् ।
सैंधवा कोलबा ताद्य यद्रूष द्रुबजाद्रुमादयः ॥

यवानीद्वितयं ज्योतिष्मती क्षारयुगं शुभा ।
अष्टवर्गो निशेचैव गुंजाद्व धात्रिपुष्करम् ॥
अब्धि शोषफलं लोध्रं ताली सं च बलात्रयम् ॥
जीवन्ती लक्ष्मणा हिस्रा मूलंकेतक मूलकं ।
चंपकं पौण्ड्रकम् चोग्रा जाती यास धवस्तथा ॥ १२८
पीलुद्वयं चगायत्री शिलाजतु करंजकम् ।
शाल्मली मूलकं मोचा कंदोदद्रुघ्न बीजकम् ॥ १२९
बाकुची च कुबेराख्य वन्ध्या कर्कोटकीजटा ।
कलिहारी भवः कंदोनेपालं त्राय माणिका ॥ १३०
कंपिल्लः कटुका यष्टी तगरं पद्मकं नवं ।
पाठाशिग्रुद्वयत्वक् चश्रेयसी गुग्गुलुर्विषम् ॥ १३१
रोचना हपुषा रालास्पृक्वाखपुर धातकी ।
काशीस मरुवकद्राक्षा मर्कटी काकमाचिका ॥ १३२
काकजंघा प्यधः पुष्पी मार्कवो धूर्तनामकः ।
विषतिं दुक बीजानि भार्गी श्रृंगी च मस्तकी ॥ १३३
वेतसद्वितयं पाठा आकल्को ग्रंथि पर्णकम् ।
... ... ... ... धात्री पिचूला रसेक्षुरं ॥ १३४
शतावरी वीर तरु नागदंतीच शैलजम् ।
सर्व तैलस्य तुर्यां सं पचेच्छौल्येथलोहजे ॥ १३५
कटाहे शनकैश्चेदं तैलंसंशोध्य शोधनैः ।
मध्यपाकेमहाराह्ना काथ मधं विनिक्षिपेत् ॥ १३६ ॥
सुपक्कं मध्य पाकेनज्ञात्वाशीतं तुमेलयेत् ।

सौवर्णे राजते काचे भाजने मृन्मये दृढे ॥ १३७ ॥
एतत्सप्तदिनादूर्ध्वं यामनावन मर्दने ।
राजवल्लभनामेदं तैलं विजयतेगदान् ॥ १३८ ॥
कस्तूरी कुकुमं चंद्रस्त्वम्बरं जोंगकद्रवः ।
निक्षिप्य पेष्य यत्नेन पात्रमध्ये विचक्षणैः ॥ १३९ ॥
एतस्यत गुणान्वक्तुं कऽसमर्थो नरो भुवि ।
वातव्या धीनशेषास्तु पैतिकांकफ जांस्तथा ॥ १४० ॥
वाह्याभ्यंतर जंवात रक्तं पांडु सकामलम् ।
मन्यास्तंभं हनुस्तंभं पादस्तंभं कटी ग्रहम् ॥ १४१ ॥
पक्षाघातं बाहुरुजं जिह्वास्तंभापतानकम् ।
वीर्यं वृद्धि करं काम रुपदं पुष्टि कृत्परम् ॥ १४२ ॥
राजेदं सर्व तैला नांवल्लभं मेदिनी भुजाम् ।
एतन्नाम्नैव विख्यातं योगि वर्यं निमित्ततः ॥ १४३ ॥

॥ इति महाराज वल्लभ तैलम् ॥

तैल पातनम्

तैलानां पातनं वक्ष्ये सूर्यं तापे तथानले ।
यंत्र निष्पीडनाच्चैव तथोष्णोदक योगतः ॥ १४४ ॥
धतूरबीज चूर्णं तुवस्त्र पूतं च कारयेत् ।
समूलोत्तर वारुण्यः कषायेणाथलोडयेत् । १४५ ॥
आलिप्य कांस्य पात्रे तुस्थापयेत् प्रखरातपे ।
सुतप्तं तनुवस्त्रेण पीडयेत् तैल माहरेत् ॥ १४६ ॥
शिग्रुपुष्कर कार्पासा पामार्गो क्षवबीजतः ।
ग्राह्यं धतूरवत्तैल मेकैकस्य पृथक् पृथक् ॥ १४७ ॥

यथा धतूरजं तैलंकाथाद्धमं स मुद्धृतम् ।
तथासर्वत्र तैलानि ग्राह्याण्यौषध संचयात् ॥ १४८ ॥
अंकोल कस्यापि तैलं तुं ब्यासमूलया ।
वाकुची देवदाल्योश्चककोंटी मूल तो भवेत् ॥१४९॥
अपामार्गकषायेन तैलंस्याद्विषमुष्टिजम् ।
मूलकाथैर्कुमार्याश्च तैलं जेपालजं भवेत् ॥ १५० ॥
काथेना पामार्ग जेनैववाकुची तैल माहरेत् ।
काथेन चेन्द्रवारुण्यास्तैलमारग्वधं भवेत् ॥१५१ ॥
कटुतुंबीदेवदालीपटोली शक्र वारुणी ।
तिक्त कोशातकी काकनासा बीजानितु चूर्णयेत् ॥१५२ ॥
अपामार्ग काक तुंडयोः काथात् तैलं समाहरेत् ।
बीजानिकटु तुंब्याश्चगोमयेनविलेपयेन् ॥ १५३ ॥
शुष्कं धान्य तुषैःसार्धं कुट्टयेत्सर्वं खल्वके ।
निस्त्वंगमज्जा चूर्णि तंस्तु भृंगराजरसैः सह ॥
मर्दयित्वा तपे तैलं गृह्णीयात् पीड़ितेसति ॥ १५४ ॥
महांकोलस्य बीजानि चूर्णितानि विभावयेत् ।
धात्रीफलर सेनैव सप्त वारं पुनः पुनः ॥ १५५ ॥
उष्णं कृत्वा तुतत्तैलं यंत्रेण परिपीड़येत् ।
कृष्णायाः काकतुंडया बीज चूर्णं तुकारयेत् ॥ १५६ ॥
कांत पाषाण चूर्णंतु कृत्वेकीकृत्यरोधयेत् ।
धान्यराशि गतात्तस्मा दुद्धृतं तैलमाहरेत् ॥१५७ ॥
धात्रीफलं रसैर्भाव्यं चूर्णं पालाशबीजजम् ।

दिनैकं चततो यन्त्रे पीडिनात् तैल माहरेत् ॥१५८॥
द्विगुञ्जाबीज चूर्णं तुनरमूत्रेण भावयेत् ॥
सप्त वारं ततो घर्मे लेपयेत्कांस्य भाजने ॥ १५९ ॥
उच्छ्रितं धारयेत्तचु तैलं पततितत्क्षणात् ॥
करंज मार नालेन पिष्ट्वाघर्मे विभावयेत् ॥१६० ॥
ज्योतिष्मती वीरजरसै रातपे तैल माहरेत् ॥
चूर्णं वाकुची बीजो त्थचिंचाबीजं त्वथपृथक् ॥ १६१ ॥
नारिके लाम्बुनालो ड्यघर्मे तचालयेत्क्षणम् ॥
पीड्येद्ग्रावपट्टाभ्यां तैलं पतीतितद् ध्रुवम् ॥१६२ ॥
आम्रास्थि बीज चूर्णं तुदशांशानलमूलयुक् ।
नारिकेलाम्बुनालोड्य घर्मे तचालयेत् क्षणम् ॥
पीडयेत् ग्रावपट्टाभ्यां तैलं घर्मे समाहरेत् ।
पुत्र जीवक बीजानां चूर्णं धामार्ग बीजजं ॥
आम्रास्थिवत्प्रकर्त्तव्या मेतत् तैलं पृथक् पृथक् ॥१६३ ॥
नारिकेलांबुना भाव्य विल्वबीजस्य चूर्णकम् ॥
दिनैकं तैल यन्त्रेणततस्तैलं समुद्धरेत् ॥ १६४ ॥
निस्तुषालाबुबीजानां । मुखंकिंचिच्चघर्षयेत ॥
तत्कल्ककांस्यपात्रेतु । लिप्त्वा घर्मे निवेशयेत् ॥ १६५
समस्तं बीज चूर्णं तुउक्तानुक्तं पृथक् पृथक् ॥
आतपाद्ग्राह्यते तैलं साध्या साध्यं न संशयः ॥१६६
तथैवोत्तर वारुण्यः कषायेन विभावयेत् ॥
बीजमात्रं ततस्तैलं घर्मं योगाच्चलभ्यते ॥ १६७
सर्वं बीजास्थिमां सेभ्मप्रभृतीनां च चूर्णकम् ॥

शुष्कं पाताल यंत्रेणतैलग्राह्यं भिषग्विदा ॥ १६८

वंशादि सर्वं काष्ठादिं नारिके र कपालिकम् ॥

तुष धान्यादि बीजानांगर्भयं त्रेणपातयेत् ॥ १६९

एवमेव समस्तानां मूलानां ग्राहयेत्बुधः ॥ १७० ॥

अथवा लावु बीजानि मुखे घृष्यानि किंचन ।

तन्मुखे टंकणं लिप्य धारये दातपेखरे ॥

तन्मुखाद्द्गलितं तैलंग्राह्यं युत्क्याभिषग्विदा ।

सुपक्व भानुपत्राणां स्वरसेनतु सेचयेत ॥

ततस्तैलं स्त्रवेद्युत्क्यातद्ग्राह्यं शनकैस्तुतः ।

इति तैलपात न विधिः ॥

॥ अथ रसायण वातु श्रंगाराभ्रक विशेषो लिख्यते ॥

मृत कृष्णाभ्र कुड़वं दुग्धेनाथ विभावितम् ॥

तत्र संमेलये देतद्द्रव्य संचित मुत्तमम् ॥ १७१ ॥

जाति पत्री लवंगं च कुष्टकं चह्नि वालकम् ॥

चोचताली शपत्रे च मांसी कर्पूर मुत्तमम् ॥ १७२ ॥

चंदनं जोंगकं चैव कुंकुमं चह्निषाणकम् ॥

त्रिफला त्रिकटुकं देयं शाणं चेति पृथक् २ ॥ १७३॥

सूक्ष्मैला जातिफलकं मृगं नाभिच चोरकम् ॥

प्रियंङ्गु चीढ़सारं च कर्षमात्रमिदं पृथक् ॥ १७४ ॥

रससिंदूरतः कर्षं गिरिजावीजतः पृथक् ॥

कांतलोहं नागबंगौताम्रं रूप्यं च हाटकम् ॥ १७५ ॥

कर्ष मात्रं पृथग्ग्राह्यं सर्व मेकत्र मेलयेत् ॥

दुग्धेनवटिकां कार्या वन कोल प्रमाणतः ॥ १७६
द्वे द्वे प्रातः समश्नीयात् ततस्तोऽयंपिबेद्नु ॥
तांबूलं चततः खादेन्नरोर्जाण विवर्जितः ॥ १७७
शृंगारा भ्रकमेनत्तु रसायनवरं मतं ॥ १
कासश्वासं च शोथं च राजयक्ष्माण मेवच ॥
क्षयं मेहं चिरोत्थं च नयनोत्थगदानपि ।
मेदोवृद्धिं पुंस्त्वहानिं प्लीहानं चाम्लपित्तकम् ॥
वातजान्पित्तजांश्चैव कफजान्विविधान गदान् ।
आमवातं सर्वं शूलं गुल्म ग्रन्थियकृद् गदान् ।
पांडु च कामलामु ग्रामरुचिंवन्हि मंदताम् ॥
मुख शोषं तृषं चैव रक्तपित्तं विषान्वयं ।
मुख रोगं कर्ण रोगं मुरोरोगं सुदुस्सहम् ।
नासा रोगं चोदराणि संग्रहणी मति सारकम् ॥
आध्मानाजीर्ण विष्टंभ विड्ग्रहोर्ध्वसमीरणम् ।
नाशयेन्नात्र संदेहः सेवितः सततं खलु ॥
परे वृष्यतमश्चायं योगोवीर्य विवर्धनः ।
शीघ्र द्रावमदार्ठ्यं च ध्वजभंगं तथैवच ।
हन्यादेष प्रयत्नेन सेवेतैनं सुधी सदा ॥
पथ्यं सदामिषं शुद्धं जांगलंतु विशेषतः ।
दुग्धं सिता घृतं गव्यं मधुर प्रायमेवच ।
सुसंस्कृतो मुहुश्चैव सेव्यं वृष्यतमंचयत् ॥
पत्र शाकाम्लकवर्ज्यं कटुक्षारादिकं चयत् ।
सर्व रोग गजेन्द्राणां हरणे सिंह एषवैः ॥

इति शृंगारा भ्रकम् ॥

क्षार चूर्णम्

कूष्मांड तिल नालानां क्षारा सौवर्चलं तथा ॥
टंकणं च यवक्षारं निक्षिपे दातपे शुभे ॥ १७८ ॥
मर्दयित्वा च काष्ठे न मेलयित्वा च भक्षयेत् ॥
कर्ष प्रमाण मति मान् तथार्ध पल मेव च ॥ १७९ ॥
देहानलबलं वीक्ष्य पथ्य भोजी भवेन्नरः ॥
गुल्मसर्वोदरप्लीह विद्रधिक्षीण कादिकान् ॥ १८० ॥
॥ इति क्षार चूर्णम् ॥

कुमार्यासवः

कुमार्या पक्वपत्राणि द्रोणार्धानि च स्थापयेत् ।
तन्मध्ये सैंधवं चूर्णं निक्षिपेदष्ट बिल्वकं ॥
तद्द्रवं गलितं नीत्वा संस्थाप्यं घृतभाजने ।
लोहचूर्णं द्विपलिकं गुडं षोडशंपालिकम् ॥
त्रिजातं देवकुसुमं जातीपत्रं च तत्फलम् ॥
चव्य ग्रन्थाजमोदा यवानी त्रिवृतातथा ।
विडंगपौष्करंमूलं मुस्ताजीरं द्वियंतथा ॥
तिंतडीकंहरिद्राच हिंगुभार्गी चित्रशृंगिका ।
द्रेक्कासौभाजनं चैव निर्गुण्डी कंटकारिका ।
सर्व शोथं पाण्डुरोगं मंदाग्निं चैव शूलकम् ।
मलानाहं वद्धं कोष्टं मर्शांसिग्रहणी गदम् ॥१८१
हन्ति सर्व मजीर्णं च बध्मार्शःक्षत नाशनः ॥ १८२
॥ इति कुमार्यासवः ॥

॥ व्योषासवः ॥

त्रयं सक्टूनां लवण त्रयं च ।
द्विजीरकौहिंगु हुताशनौ च ॥

धान्या जमोदं त्रिफला लवङ्गं ।

तृटि त्वचा मूल कबीज कानि ॥ १८३

प्रत्येक मेतानिपलोन्मितानि ।

द्रव्यस्तु जंबी रसस्तु लैव ॥

तत्सर्व मालोड़ित मन्न राशौ ।

निधाय सप्ताह मथ प्रभाते ॥ १८४

यथाग्नि योगं भिषजा तु तस्मात् ।

प्रयोजयेत्पुण्य यशोभिलाषी ॥

शूलेषु प्लीहं च सुगुल्म रोगे ।

सर्वोदरे कोष्ठ भवेगदेऽपि ॥ १८५

॥ इति व्योषासवः ॥

॥ टंकणासवः ॥

टंकणं लवण पंचकं तथा पंचकोल मथ धान्यकं पुनः ॥

तिन्तिड़ी फलमिभेन्द्रपिप्पलीवारिदस्त्रिफल मस्तुबेतसम् ॥ १८६

आतितेय कुसुमं त्रुटिस्त्वचा ।

जाति सम्यकटुकं पलोन्मितम् ॥

सुपक्व जंबीररसे निषिक्तं ।

तुला प्रमाणे सुधिया समस्तं ॥ १८७

त्रिसप्त रात्रौ च सुधान्य राशौ ।

निधाय पश्चादपनीयतस्मात् ॥

शूलोदरं प्लीह गुदाकुं राधा ।

अजीर्ण जान्वात कफोत्थ रोगान् ॥ १८८

मन्दानलत्वं बल हानि मुच्चै ।
विनाशये न्नात्र विचार नास्ति ॥ १८९

॥ इति टंकणा द्यां सवः ॥

॥ लवंगाद्यासवः ॥

लवंग नागरे कृष्णा मरिचं चेतकी शिवा ।
टंकणं दहनश्चांत्याद् वर्धमान क्रमादि ॥ १९०
सैन्धवं सकलैस्तुल्य मावाप्य मथयो जयेत् ।
क्रमिघ्नं जीरकं द्वंदं यवानी युगलं तथा ॥ १९१
क्षाराष्ट कंशठी पाठा विडं सौ वर्चलं तथा ।
शङ्ख भस्म शुभं देयं प्रत्येकं पल संमितम् ॥ १९२
द्रोण प्रमाणेनिक्षिप्तं रसे जंबीरसं भवे ।
निखातमवनी गर्ते त्रिसप्त दिवसावधि ॥ १९३
दहत्यग्निस्तृणानीवरोगान्नुदर संभवान् ॥ १९४
पलाश वज्रि शिग्रूणां तिलमुष्क टंकणं ।
यवा जस्वर्जिका क्षारौ क्षाराष्टक मुदा हृतम् ॥ १९५

क्षार त्रयाद्यासवः

क्षार त्रयं त्रिकटु पंच पटु द्विजीर ।
तीक्ष्ण पल कमथ हिंगु पलत्रयं च ॥
तुला प्रमाणे निक्षप्य निंबूफल रसे भिषक् ।
पक्वं तुधान्य राशिस्थं ततस्तस्मात्रस मुद्धरेत् ॥ १९६
सिद्धं जयति शूला दीन् वह्निमांद्य भवान्गदान् ।
गुल्मादींजठरोत्थाश्च शूल मष्ट विधंतथा ॥ १९७

॥ इति क्षार त्रया सवः ॥

क्षारासवः

जंबीर नीरं तुलया परिपूर्ण भाण्डे ।

त्रिसप्त काह्मवनी तलके निधेयम् ॥

गुल्मादि काञ्जयति कोष्ट गदान थोग्रान् ।

मन्दा नलं च बिषमं परमं च शूलं ॥

कर्ष पलार्द्ध मथवापि वलं समीक्ष्य ।

पेयः समस्त कफ बात गदोपशांत्यै ॥१९८

एला सवः ॥ इति क्षारा सवः ॥

एला युग्म खुरासनेद्र जवना ।

दीप्या जमोदा भया ॥

त्वक्क्षीरी मुशली युगा मर मिशी ।

युञ्जाति पत्री फलम् ॥

भार्गी मोचरसाहिफेन खदिर ।

त्वक् पत्र वासा शिवा ॥

कर्पूराक्षविडंग पूगफलिना ।

भीरुश्चदंष्ट्रे क्षणम् ॥ १९९

मेदा युग्म विदारि भृंग कवरी

बीजेभमां सीवला ॥

पृथ्वी वानर बीज खाखसफलं ।

त्वग्बीज वृद्धोच्चटा ॥

निगुंडी बीज कौंतीनत भुजगवला ।

मूलमा कल्क राग्नि ॥

त्वक्चव्योपण पिप्पली गज कणा ।

ज्ञीली मरु कमस्तकी । २००

गंजावीज मिदं पृथक् पलमिदं ॥

लोह द्वयं माक्षिकं ।

पथ्या दाड़िम चर्म एव कुसुमां ।

भोदौ तु पृथक्द्व्यंजली ॥

प्रत्येकं त्रिपकट्फला गुरुहिमं ।

ह्रीवेर हंस्वान्प्रथक् ॥

प्रस्थार्धं मदनीय हेतु कुसुमं ।

क्षाराः पृथक् प्रस्थिकाः ॥१०१

बर्षाभूवदरी बिकंकतशामी ।

वब्बूल मूल त्वचां ।

प्रत्येकं चतुला गुड़्तुलां ।

खाय पुनस्तद्दपां ॥

गर्त्तस्थापय भाण्ड कंस बिहितं ।

यावत्तदम्लं भवेत् ।

पश्चाद् उद्धरतः पलं पिवसुख ।

मायन्त्वरिष्टोत्तमम् ॥ १०२ ॥

गौड़स्तर्पण दीपश्नोग्निजननो ।

रुच्यं खरारोग्य कृत् ।

श्रोतःशुद्धिकरःसरःकृश हितो ।

वर्ण्यो मरुत्श्लेश्मजित् ॥

एवं माक्षिकशर्करे अपि गुड़े ।

स्थाने पृथक् दापये त् ।

ख्याता माधव शर्कराचपि तथा ।

वत्तदूऽयथा शान्तये ॥ २०३ ॥

॥ इति एलाद्यारिष्टः ॥ माधवशंकरेच ॥

जंबीराद्यासवः

जंबीर रसतः प्रस्थे शंख भस्म निवारयेत्।
पलंपलार्धंसिंधूत्थं पल युग्मं षडूषणम् ॥ २०४ ॥
चातुर्जातिस कंकोलं अम्लवेतं चजीरके ।
सौवर्चल विडे चैव कुयान्निष्कं पृथक् पृथक् ॥ २०५ ॥
रामठं भर्जितं कर्षं वस्त्र पूतं विनिक्षिपेत् ।
त्र्यहं स्थाप्य चतुर्थेऽह्निवं मर्घ संगा लयेद्रसम् ॥ २०६ ॥
कर्षमात्र रसं ग्राह्यं भोजना त्पूर्वं मेव च ।
जयेच्छूलाग्नि मांद्य मुदर व्याधिसंचयम् ।
सकलान् कोष्ठ रोगांश्च नाशयेन्नात्र संशयः

॥ इति जम्बीराद्यासवः ॥

जंबीराद्यासवोपरः ।

तुला परिमिते वस्त्र पूते जंबीरजे द्रवे ।
मरिचं पिप्पली विश्वं जीरकं कृष्ण जीरकं ॥ २०९
सौवर्चलं विडं चैव स्वर्जिका याव शूकजे ।
राजिका पिप्पली मूलं मल्लिका क्षार एव च ॥ २१०
एतानि पलमात्राणि रामठं द्विपलं क्षिपेत् ।
संस्थाप्य मृन्मयेपात्रे भूमौ भांडे निधापयेत् ॥ २११
उद्धृत्यैतत्त्रिसप्ताहात यथा नल वलं पिवेत् ।
पंच गुल्मास्तथा शूलान् आनाह मपि दुर्जयं ॥ २१२

अग्नि सादं तथा जीर्णं नाश यत्येवतत्त्वणात् ॥ २१३

॥ इति जंबीराद्यासवोपरः ॥

॥ कूष्माण्डासवः ॥

अश्म भेद कणा शुंठी धन्वयास पुनर्नवा ।
त्रिफला पौष्करं भार्ङ्गी रास्ना चित्रक वासकम् ॥२१४
पतंग रेणुका दार्वी उशीरं बदरी त्वचां ॥
एषां पलद्वयं कुर्याच्चुद्रा प्रस्थ द्वयं तथा ॥ २१५
द्रोणमेकं जलं दत्वा पाद शेष चकारयेत् ।
चातुर्जा तलवंगानां मेला जाती फलं तथा ॥ २१६
लोह चूर्णस्य कुडवं कुडवं चाभ्रवङ्गयोः ।
एतत्त्तमिलितं पात्रे स्थापितं धान्य राशिगं ॥ २१७
मास मेकं परिस्थाप्य भत्तयेच द्विकर्षिकम् ।
प्रमेहं मूत्रकृच्छ्रंच पांड रोगं सकामलम् ॥ २१८
रक्त पित्तं तथा वात रक्त निष्ठीवनं तथा ॥
नासा रक्तं च स्वेदंच त्वग्वैवर्ण्यं नाशयेत् ॥ २१९
स्त्रीणां च प्रदरं हन्ति जीर्ण रक्त प्रकोपनम् ।
ये चान्ये वात जा रोगा येचान्ये शोणितस्य च ॥२२०
धातु त्तयं धातु शोषं रक्त दोष बिनाशनम् ।
वलितं हन्ति वालानां वालानां चाति शस्येत ॥ २२१
द्रोण मेकं जलं तत्र कूष्माण्डसौवद्राययेत् ।
कूष्मांडका सवो ह्येष विश्वामित्रेणपुजितः ॥ २२२

॥ शंखद्राव: ॥

त्रिचारं पटु पंचकं च गिरिजं ।
लोणा सुरोत्थाबसा ॥

फेनो व्रह्म गरं समुद्र लवणं ।
क्षारोह्यपा मार्गजः ॥
क्षारो वज्र भवोथ मुष्ककभवः ।
पालाश सूर्योद्भवौ ॥
सौराष्ट्री सम भागतो तुमृदितं ।
घर्माग्निनाशोषितम् ॥ २२३
भाव्यं कट्टर सर्षपाम्बुदरसैः ।
संसिच्य सूक्ष्मंक्षिपेत् ॥
यंत्रेतन्नलिकाभिधेशुभदिने ।
संस्वेदयेन्मद्यवत् ॥
शंख द्राव रसायननं गद् वताम् ।
वल्लैक मात्रं पुरा ।
जिह्वाग्रेहत्रि भाव्य लिप्य विबुधैः ॥
देयन्न दन्तानस्पृशेत् ॥ २२४
जिह्वास्ये च मयूर पत्रवलिकां ।
तन्मध्यगं तं रसम् ।
किंचिन्मात्र ममु पिवन् इतिनचेत् ।
हृत्कंठदाहो भवेत् ॥
सर्वाजीर्णं हरोह्निस्तिगुदजान् ।
शूलान्मदुर्विद्रधीन् ।
वन्हे दीप्तिकरः कफा निलहरः ।
सीहाभय ध्वंसनः ॥ २२५ ॥
॥ इतिशंखद्रावः ॥
ऊषकंसार्द्ध कुड़वं सैन्धवंयाव शूकजम् ।
पृथक् कुड़व कंकाची कुड़वार्धं पलांशकम् ॥ २२६ ॥

नवसारान्नाति सूक्ष्मं चूर्णं यित्वाथनिर्हरेत् ।
संधाय नलिकायंत्रे बाष्पां वुवदि्दं स्मृतम् ॥२२७ ॥
शंख द्रावा भिधंशूल गुल्माश्मरि विनाशनम् ॥२२८॥
इतिशंखद्रावोऽपरः

॥ अम्लवेत संस्कारः ॥

कटुषट् कं चतुर्जातं त्रिक्षारं पटु पंचकम् ।
लवंगं दीप्यकं चैव तथापाठा विडंगकम् ॥ २२९ ॥
जातीफलं जातिपत्री तथा कृष्णा गुरुं गुरू ।
कर्ष द्वयप्रमाणेन योजयेत्तत्पृथक् पृथक् ॥ २३० ॥
भार्गी पुष्कर मूलं च शृंगी तालीस पत्रकम् ।
शतपुष्पादेवदारु वाष्पिका धान्यकं त्वचा ॥ २३१ ॥
आकल्करः कोकिलाक्षो मुस्तामो चरसस्तथा ।
कौबेरी हवुषा कुष्ट मजमोदं च जीरके ॥ २३२ ॥
भृङ्ग राजश्च कंकोलं त्रिवृच्च गज पिप्पली ।
त्रिफला मूलका द्वीजं रास्ना हिंगुपिचुन्मितम् ॥२३३॥
सर्व मेतद्विनिष्पिष्य सूक्ष्म चूर्णं तुकारयेत् ।
पक्वानि चाम्लवेतस्य फलान्ये तेन पूरयेत् ॥ २३४
पूर्णानितानि विज्ञाय युक्त्या संशोषयेत्सुधीः ।
गुल्मेशूलेऽग्नि मांद्ये च विशूच्यलसकादिषु ॥ २३५
योज्य मत्त मितं रुच्यमम्लवेतन्न चाधिकम् ॥ २३६
इत्यम्ल वेत संस्कारः ॥

संस्कृत तक्रपानम्

विश्व जीर विडं भृष्ट हिंगुकं ।
मालती फल ममर्त्य पुष्कम् ॥
चोच सैंधव कणा सुरी रजो ।
मिश्रितं सुगलि तंपटात्पुनः ॥
तक्रमुत्तममनेन मिश्रितम् ।
पीतमात्र मनिलस्य दीपनम् ॥
आम शूल शमनं रुचि प्रदं ।
भोजनांत परिपीत मुत्तमम् ॥ २३७

॥ इति संस्कृत तक्र पानम् ॥

चोवचीनी पानकम्

द्वीपोत्थरास्ना सकलाम्र युग्म ।
मभस्तु लायां पच पाद हीनम् ॥
अनेन संस्वेद्य रोगिनं तत् ।
वाष्पैरिदं विल्व युगं च पाययेत् ॥
कुटि प्रवेशस्य विधिः समाचरन् ।
शौचान्न पानेषु भजेत्तदंभः ॥
गोधूम दुग्धाज्य मधूलिशा लीन् ।
अद्यादुघ न प्रावृत देह एवं ॥ २३८
चतुर्दशाहानि रुजो वलत्वे ।
सप्ताह मेवं च विधिनिषेवेत् ॥
त्रिसप्तकाहं प्रवला निलामये ।
रोगी वली चैव निरोगकम् च ॥

॥ इति चोवचीनीपानकम् ॥

आम्र पाकः

पक्वाम्रस्य रसं द्रोणे सितामाढकसं मिताम् ।
घृत प्रस्थ मितं दद्यान्नागरस्य पलाष्टकम् ॥
मरिचं कुडवोन्मानं पिप्पलीद्विपलोन्मिता ।
सलिलस्याढकं दत्वा सर्व मेकत्र कारयेत् ॥
मृत्पात्रे पाचये सर्वं काष्ठदर्व्या विघट्टयेत् ।
धान्यकं जीरकं चित्रं पत्रकं मुस्तकं त्वचम् ॥
वृहज्जीरकमप्यत्र ग्रन्थिकं नागकेशरम् ।
एलाद्वंद्वं लवङ्गं च जातीपत्रीफलं पलम् ॥
सिद्धे शीते प्रदद्याच्च मधुनः कुड़वद्वयम् ।
भक्षयेत्भोजनादर्वाक् पलमात्र मिदं नर ॥
क्रमेण जायते नृणां बलवर्णाग्नि दीपनम् ।
स्त्रीपुहर्षं परं कुर्य्याद्वाजीकरणमुत्तमम् ॥
ग्रहणी नाशये देतत् क्षयं चाममरोचकम् ।
अम्लपित्तं श्लेष्मपित्तं कामलां पाण्डुतामपि ॥
इत्याम्रस्य पाकः ॥

आम्र बीज पाक:

प्रस्थयुग्माम्रबीजं सूक्ष्मचूर्णं तुकारयेत ।
कटाहे मृण्मये क्षिप्त्वा गोदुग्धस्यतुर्ज्ञांततः ।
आवर्तये द्घनत्वं तु यावदायाति तच्छनैः ॥
सितोपलां तदर्धां तु पश्चात्तस्मिन् विनिक्षिपेत् ॥
तत्र क्षिपेचूर्ण मेषां चातुर्जातम् सचन्दनम् ।

उच्चटा तगरेक्षूर गोक्षुरोशीर बालकम् ॥
स्वर्णबीजं च बोज चतथावानरिकाभवम् ।
कृष्णागुरु लवङ्गं च मोचवेष्टं च तालिका ॥
मुशलीयुगलं धान्यं षडूषण मजाजिका ।
पृथक् कर्षमितं ग्राह्यं देयं कर्षमितंसदा ॥
नारीदर्पहर: कासश्वास क्षय चिरज्वरान् ।
जयेत्कुर्य्याच्च कान्ति च बलपुष्टि प्रमेहनुत् ॥

इत्याम्र बीज पाकः ॥

नारि केरि पाक:

कुड़वं नारिकेरस्य सूक्ष्मं दृषदिपेषयेत् ।
नारिकेलद्रवेपूते चतुर्गुणमिते पचेत् ॥
नारिकेलरसा भावे तत्क्वाथे पाचये च्छनै: ।
पश्चात्तस्मिन घनीभूते सिताप्रस्थं विनिक्षिपेत् ॥
धान्यकं पिप्पलीमूलं चातुर्जातं लवङ्गकम् ।
शाणमात्रं पृथक् ग्राह्यं शीतीभूते क्षिपेद्बुधः ॥
नारिके लकखण्डोयं पुंस्त्वनिद्राबलप्रद: ।
अम्लपित्तं रक्तपित्तं श्लेष्मपित्तं सुदु:सहम् ॥
जरत्पित्तं पित्तरोगान् शूलं च परिणामजं ।
नाशयेन्मेहजातं च शुष्कंदावंन लो यथा ॥
कल्कं नारिकेरस्य घृते संभर्जयेत् शनै: ।
पश्चाद्रसे नारिकेरे तत्क्वाथे वा बिनिक्षिपेत् ॥

इति नारिकेर पाकः

पिप्पली पाकः

कणाचूर्णस्य कुड़वं षट्पलं हविषस्तथा ।
शतावरीरसस्याष्टौ पलान्यत्र प्रदापयेत् ॥
खण्ड प्रस्थं समावाप्य क्षीरप्रस्थ चतुष्टये ।
क्षीरेपकत्वा घनीभूते सितां पश्चाद् विनिक्षिपेत ।
त्रिजातमुस्त धान्या कं शुंठीमांसी द्विजीरकम् ॥
अभया मलकं चैव चूर्णंद्वादशमासकम् ।
तदर्धं मरिचं नागं सारं खदिर मेवच ॥
मधुनस्त्रिपलं चैव प्रक्षिप्याशु प्रयोजयेत ।
शूला रोच कहृद्दाह छर्दि पित्ताम्ल पित्तकम् ॥
अग्नि मांद्य बलभ्रंश दैण्यं चापि क्षिणोति च ।
बात श्लेष्मगदोन्मूली खंड पिप्पलि संज्ञितम् ॥

॥ इति पिप्पली पाकः



शुंठी पाकः

शुण्ठी चूर्णस्य कुड़वे खण्डप्रस्थ द्वयं तथा ।
दत्वा द्विकुड़त्रं सर्पिः क्षीरं प्रस्थ चतुष्टयम् ।
सिद्धेऽवतारिते दद्या द्धात्री धान्यक मुस्तकम् ।
अजाजी पिप्पली मूलं त्रिजातंकारवी शिवा ।
त्रिशाणं मरिचं नागं षण्माषं च पृथक् पृथक् ।
पलत्रयं च मधुनः शीतीभूते परिक्षिपेत् ॥
ततो मात्रां प्रयुञ्जीत अम्लपित्त प्रशान्तये ।
शूलहृद्रोगवमनै राम वातैश्च पीड़िते ॥

हीनवन्हीर्हितो नित्यं शुण्डी खण्डो मृतोपमः ।

इति शुण्ठी पाकः

जाती पत्री पाकः

जाति पत्री नवा प्रस्थं चूर्णितं पाचये च्छनैः ।
तुला दुग्धे सुरभ्याश्चतु लाढ्वो शर्करां क्षिपेत् ॥
कटुषट्कं चतुर्जातं नवीना मस्तकी तथा ।
मोचाग्नि मुषली द्वन्द्वं स्वयं गुप्तेक्षुरेत्रुटिं ॥
जोङ्गकं कुंकुमं चन्द्रंममलं नलदं तथा ।
खुरासाणं कुबेरञ्च वचा च सिन्धुशोषणम् ॥
कनकं व्याल फेनञ्च वंग ताम्र मथा यसम् ।
पृथक् कर्ष मितं ग्राह्यं सर्व मेकत्र कारयेत् ।
भक्षये त्कर्षमात्रं तु पलार्द्धं वा यथा वलम् ।
वलवीर्य करोह्येष प्रमदाह्लाद कारकः ।
स्मृतिकान्तिप्रदो वाजीकरो बृष्यसुखप्रदः ।
धात्वौ जस्करो वीर्य स्तम्भनो बलवर्द्धनः ।
प्रमेहान् विंशतिं हन्यात्श्वासकासान् सुदारुणान् ।
जीर्णज्वरं हि यक्ष्माणं वह्निमान्द्यमरोचकम् ।
नाशयेत् सकलान् रोगान् जातीपत्री रसायनम् ।

इति जाती पत्री पाकः

पद्मवासपाकः ( नानीमांयीति लोके )

पद्मवासं प्रस्थमेकं क्षीरद्रोणे विपाचयेत् ।
घृत प्रस्थ समायुक्तं पचेच्च मृदुवह्निना ॥
सांद्रीभूते क्षिपेत्तत्र प्रस्थार्द्धं मधुनस्तदा ।

खंड प्रस्थद्वयं चैव स्निग्धभांडे विनिक्षिपेत् ॥
चातुर्जात लवंगानामक्ष मात्रं तथैव च ।
आकल्कलं तथा कर्षं चन्द्रं च मृगमदंतथा ॥
धारासत्वं कर्षमात्रं शुद्ध गोंदं पलाष्टकम् ।
निर्गुण्डी वेल्लकंमूलं पलमात्रं तथैवच ॥
बला त्रयसमेतं च मुषली गोक्षुरकं तथा ।
लोहाभ्रकं कर्षमात्रं त्वक् क्षीरी तावदेवहि ॥
जातीफलं जातिपत्री सर्वमेकत्र कारयेत् ।
पलमात्रं पलार्द्धंवा यथाग्नि प्रति भोजयेत् ॥
कास श्वासं तथा पांडु प्रमेहं वह्निमंदताम् ।
प्रदरं योनिदोषञ्च बहु मूत्रं तथैवच ॥
बल पुष्टिकरं चैव सेविते सर्व रोगहृत् ॥

॥ इति पडवास पाकः ॥

गंधक रसायनम्

गंधकं नववीताख्यं शोधितं तु पृथक् पृथक् ।
सकृत गव्य घृते दुग्धे कषाये त्रिफला भवे ॥
पश्चात्तद्भावयेद्युक्त्या चातपेशोषयेत्पुनः ।
धात्री रसैश्चतुर्जातकाथैरमर पुष्प कैः ॥
क्वाथैः शतावरीनीरै विदारीकंदजांबुना ।
सम्यक् शुष्कं यदा तत्र तत्तुल्यां च सितोपलाम् ॥
योजयेत्कर्षमात्रं तु मधुना लेहयेन्नरः ।
एतद्रसायनवरं बली पलित नाशनम् ॥

धातु क्षयं मेहगणं मंदाग्निं ज्वर संक्षयम् ।
त्वग्दोष नाशनं श्रेष्टं सर्वं कुष्ट निवारणम् ॥
वात रक्त चिरोद्भूत नाशयेदविकल्पतः ।
दद्रुविच र्चिकण्डूंश्च विस्फोट पिडिका रुजम् ॥
मंडलानि च सिध्मानिं पामानं त्वग्विवर्णताम् ॥

॥ इति गंधकरसायनम् ॥

एरंड पाकः

एरंडबीजानि च मानिकात्र शतावरीमूलपलद्वयञ्च ।
बिल्ताश्वगंधामुपलप्रमाण' दुग्धाढके पाचित चूर्णमेव ॥
लोहे विशाले सुदृढे सुपात्रे प्र ज्वालयेदग्निमधोऽत्रमंदम्
पश्चात् सुशीतेऽत्रघने सुपाके प्रस्थं सितायाश्चक्षिपेद्धिवैद्यः ॥
त्रिवृद्यवानी त्रिफला चरास्ना लवंग जाती कुसुमं त्रिजातम् ।
प्रत्येकमेतानि च पलार्धकानि नियोजयेदत्तविचूर्णितानि ॥
पांडूदरे विड्ग्रहणांग पीड़ा पक्षक्षये सर्वंगवातरोगे ।
विश्वाचिकागृध्रसिवातरक्ते शोफामवाते पदरुक् भवेच ।
प्लीहाश्मरी मेहकक्छ्रूरोगे वातारिबीजा ख्यरसायनंस्यात् ॥

इति एरंड पाकः ।

स्तम्भन वटी

समुद्रशोषबीजानि भागैकं धूर्त्तबीजकम् ।
भागत्रयं ज़ातिपत्री भागमेकं च तत्फलम् ॥
यवानीपारसीकोत्था भागत्रयसमन्वितम् ।
भागार्ध महिफेन' च महिषीक्षीर शोधितम् ॥

दोलायं त्रे ण युक्तयैव तत्क्वाथात्खाखसवल्कलात् ।
त्रिवारं भावितं तत्तु ... ... ... ......
विजयाधूर्तबीजोत्थतैलमेतद्विभावितम् ।
बदरास्थिप्रमाणेन वटिकां कारयेद्भिषक् ॥
मदनानंदजननी वीर्यस्तम्भकरीं पराम् ॥
यौवनोद्दाममत्तानां मद्यपाना ञ्च योषिताम् ।
कामार्तानां विशेषेण मद कुंजर केसरी ॥

स्तम्भनम्

भागै कामृगनाभिश्च नवीनं कुंकुमं तथा ।
जातीफलं लवंगंच प्रत्येकं द्वयभाग पृथक् ॥
अहिफेनं चतुर्भागं विजयायुग्मभागिका ।
चणकाभावटी कार्यावीर्यस्तम्भकरी ध्रुवम् ॥

इति स्तभनम्

स्तंभनम्

अब्धिशोषाच्च सिद्धार्थात् चतुर्वल्लमितान्पृथक्
सार्द्धद्विकुडवे दुग्धे माहिषे पाचयेत् शनैः ॥
अर्धावशिष्टं तु तद्दुग्धं सायं काले पिबेन्नरः ।
बिंदुपातं नकुरुते वाजी करणमुत्तमम् ॥

द्वितीयम्

आकारकरभः सर्पफेनः सूतश्च शाणिका ।
यवान्या मुष्टिश्चसर्वं मेकत्र चूर्णयेत् ॥

एतच्चूर्णं प्रयुञ्जीत निष्कार्धं निष्क मेवच ।
प्रातःसायं कोष्ण जलै मुखपाके मुहुःसहे ।
प्रवाहिकातिसारेषु मलद्रावेऽग्निमांद्यके ।
ग्रहण्यां च घटीयंत्रे शीघ्रवीर्य द्रवेत्तये ॥
स्तम्भनं परमं शस्तं रेतसः परमद्भुतम् ।

अन्यच्च

पलंयवानी तुषतोऽर्द्ध कर्षं रसाहिफेनोष्ट्रफलोत्थमज्जा ।
संमर्द्य दद्यात्पिचुमात्रकंवा तदर्धमात्रं दिवसावसाने ॥
संध्यस्थि शूला निलरक्तपित्त शातिं दिनैः स्वल्पतरैश्चकुर्यात् ।
क्षारातिपट्वम्लकटुकं त्यजेत् सिताज्यदुग्धोदनभोजनंस्यात् ॥

इतिस्तम्भनम्



गुलाब पाक

अरुण शतपत्रीया तस्याः पुष्पसहस्रकम् ।
वृंत्तकेशर निर्मुक्तं केवलं दलसंचयम् ॥
गोघृतप्रस्थ के पाच्यं शनकैर्मंदवन्हिना ।
ततस्तस्मिन् क्षिपेच्छुभ्रां सितां प्रस्थ चतुष्टयम् ।
चातुर्जातं लवंगञ्च जातीपत्री फलं पलम् ॥
मृद्वीकाद्विपला नारीकेरं च द्विपलं क्षिपेद् ।
वातादकमुकूलं च चारमज्जापलं पृथक् ॥
पलं गुडूचीसत्वस्य कर्पूरं शाणमात्रकम् ।
तावन्मात्रं मृगमदं शीते तत्रतु मेलयेत् ॥

रक्तपित्ते श्लेष्मपित्ते वातपित्तश्लेष्मपित्त के ।
वांतिदाहक तृष्णासु मुखशोषेऽप्यसृग्दरे ॥
प्रमेहे मूत्रकृच्छ्रेऽपि चोष्णवात मुखामये ।
रक्तदोषे तथा पाण्डौ कामलं कार्श्यमेवच ॥
नाशयेन्नात्रसंदेहः शतपत्री रसायनम् ।
इति गुलाबपाक ॥

पूगीफल पाकः

पूगीफलानि नव्यानि दक्षिणात्यानि प्रस्थकम् ।
दिनद्वयजले स्थाप्य तदुद्धृत्यचपेषयेत् ॥
श्लक्ष्णपिष्टीं ततः कृत्वा तुलादुग्धे शनैःपचेत् ।
ततोघनतरे सिद्धे तुलार्धं शर्करां क्षिपेत् ॥
चातुर्जातं लवंगं च जाती पत्री च तत्फलम् ।
बांशी च त्र्यूषणंधान्यं शुद्धसारं च खादिरम् ॥
कुंडलीसत्व ममलं मस्तकी पारसी वचा ॥
नतं नलद कंकोलं चंदनागुरुकुंकुमम् ।
मोचामूलरजश्चात्मगुप्ता गोक्षुरकेक्षुरम् ॥
अश्वाख्या मुशली द्वंद्वंपर्णी युग्मविदारिका ।
मूर्च्छितं सूतकं बंगं लोहताम्राभ्रकं मृतम् ॥
कर्षमात्रं पृथक् देयं सर्वमेकत्रकारयेत् ।
पलार्धंवा त्रिकर्षंवा यथा वह्निबलंनरः ॥
खादेदनुपिवेद् गव्यं पयःससितमुत्तमम् ।
धातुक्षैण्यं तथाकासं श्वासं वीर्यच्युतिंतथा ॥

ध्वजभगंच शैथिल्यं पुंस्वहानिं च नाशयेत् ।
कामलां मूत्ररोगं च मेहं चापिसुदारुणम् ।
अश्मरीं मूत्रघातं च रक्त पित्त मुरःक्षतम् ॥
अम्लपित्तं प्रमेहाश्च नाशयेन्नात्रसंशयः ।
अतिपुष्टिकरोह्येष पुंगीपाकोरसायनम् ॥

लघुसौभाग्यशुंठी

चूर्णितं नागरप्रस्थं शोधयेत्स्वच्छवाससा ।
आढकद्वयमात्रंच पयोगव्यं विनिक्षिपेत् ॥
घनीभूतेततः सर्पिर्गव्यं पलचतुष्टयम् ।
शुभ्रसिता ततः प्रस्थं द्वयं तस्मिन् क्षिपेत्ततः ॥
शीते लवगं त्रुटि युग्मकं ... ... ... ...
धान्याकंकेशरं जाती पत्रीजातिफलंतथा ।
मगधां मरिचं जीरंगं घुसृणं केसरं तथा ॥
अर्द्धमुष्टि प्रमाणानि प्रत्येकं चूर्णितं ततः ।
एकीभूतं सुपक्कं तत्सुवर्णं द्रुतयं तथा ॥
एतस्माद् भक्षयेद् युक्तया प्रातःपथ्यसमन्वितम् ।
सौभाग्यशुण्ठी नामासौ वातश्लेष्मनिबर्हणः ।
शूलं शोथो वातरुक् नश्येदेतस्यसेवया ।
मंदाग्निं ग्रहणी गुल्मां सूतिकारोगसंकरम् ॥
वृष्यारुचिकरी हृद्या बलवर्णं करीभृशम् ॥

सौभाग्य लघु शुण्ठी

सौभाग्य शुण्ठी मोदकः

नागरं खंडशः कृत्वा प्रस्थमात्रं भिषग्वरः ।
अजादुग्धाढकद्वंद्वे विपचेन्मन्दवह्निना ॥
घनीभूतेततः क्षीरे शुण्ठीं तस्मात्समुद्धरेत् ।
अतिसंशोष्यातपेतु पश्चात्सूक्ष्मं तु पेषयेत् ॥
घृतभानी समावाप्य तद्दुग्धं तुपुनः पचेत् ।
यावत्पिंडत्वमायाति ततस्तत्र विमिश्रयेत् ॥
चातुर्जाततुगाबेल्ल धान्यं जीरकयुग्मकम् ।
मिशिमाकल्करं शुण्ठी लवंगं च शतावरीम् ॥
तालमूली च मिरच मश्वगंधाक पिकच्छुकम् ।
ग्रन्थिकं चव्यकं चैव जातीपत्री च तत्फलम् ॥
श्रृंगाटकं वृद्धदारु मुष्टकंटकबीजकम् ।
त्रिवृतं त्रिफला चैव तथैवच बलात्रयम् ॥
जलं सेव्यं वाजिगंधां चंदनागुरू कारवीं ।
कंकोलमजगंधां च द्राक्षाक्षोटक चोरजम्
खुरासानयवानीच बातादं नारिकेलकं ॥
खर्परमभ्रकं लोहं वंगताम्रशिलाजतु ।
स्वर्णमाक्षिकमप्येतत्प्रत्येकं कर्षसंमितम् ।
चूर्णीकृत्यक्षिपेत्तत्र पाणिभ्यां मर्दयेद्दृढम् ॥
ततः सितांतुलापक्त्वा वटकान्कारयेद्बुधः ।
पलं तदर्धमथवा यथाग्नि बलमुत्तमम् ।

खंड नागरकं नाम्ना रसायनवरं भवेत् ॥
अपथ्यवर्ज्यो मनुजः प्रातः सायं च भक्षयेत् ॥
प्रसूता नामतिहितं स्त्रीणां च मदापहम् ।
पुनर्यौवनदं स्त्रीणां सेवितं चिरकालतः ।
क्षये पांडौ ज्वरे कासे श्वासे मंदानलेतथा ।
ग्रहण्यां रक्त गुल्मेच प्रदरे सोम रोगके ॥
दुग्ध क्षये मूत्र दोषे कामलायां च गलग्रहे ।
पित्त रोगेषु सर्वेषू वात पित्त मदेषु च ॥
वात व्याधिषु सर्वेषु शस्यते परमौषधम् ।
अश्विभ्यां पूर्वं मुदितः शक्यै योगोऽयमुत्तमः ॥
एषा सौभाग्यदा शुण्ठी स्त्रीणां पुत्र प्रदा ध्रुवम् ।
॥ इति सौभाग्य शुंठी पाकः ॥

विजया वटी

त्र्यैलोक्य विजयापत्रं सबीजघृत भर्जितम् ।
त्रिकटु त्रिफला शृंगी कुष्ठ सैंधव धान्यकम् ॥
शटी तालीश पत्रञ्च कट्फलं नाग केशरम् ।
अजमोदा यवानी च यष्ठी मधुकमेवच ॥
मेंथी जीरक युग्मं च गृहीत्वा श्लक्ष्णचूर्णितम् ।
यावन्त्येतानि चूर्णानि तावदेवतदौषधम् ॥
तावत्येव सितादेया यावत्यायाति बंधनम् ।
घृतेन मधुना मिश्रं मोदकं परिकल्पयेत् ॥

त्रिसुगंध समायुक्तं कस्तूरी चन्द्र संयुतम् ।
स्थापयेत्घृत भाण्डे तत्खादेन्मदन मोदकम् ॥
प्रातः काले समश्नीयात् श्रीमदनानंद मोदकम् ।
बात श्लेष्म विकारांश्च कासं श्वास भ्रमं क्लमम् ॥
सर्वं शूल मामवातं वह्निमाद्यं विनाशयेत् ।
चिरजं ग्रहणी रोगं पांडु रोगं सकामलम् ॥
प्रमेहं बलहानिञ्च नाशयेन्नात्र संशयः ।
चतुर्मुखमुखाच्छ्रुत्वा नारदेन निवेदितम् ॥
प्रमेहान् विंशतिं चैव राज यक्ष्माण मुल्वणं ।
सर्वं लूता विषं हन्ति सर्वस्थावर जंगमम् ॥
योनि दोष मपस्मार मुन्मादं विषम ज्वरम् ।
वलेन गजतुल्येन वेगेन तुरगोपमः ॥
हयतुल्योभवेत्त्रोषु गृध्र दृष्टिश्च जायते ॥

॥ इति कामेश्वर मोदकः ॥

चोपचीनीपाकः

द्वीपाश्वा कुडबं लवंगतगरापोभृंग मुण्डीवरा ।
बीरा युग्मवरी त्रिकंट मुषली पत्री सपत्रद्विपः ॥
एला जीवन शाल्मली त्रिकटुकम् कण्डूकरीचेत्तुरा ।
मूलं चैत्त्रवमुच्चटाकल्करं दीप्यामदामेथिका ॥
कंकोलं सुमनः फलं फणिकफः शोषंसमंगाहिमः ।
गुंजा कोलजटा तथा मलयजं कर्पूर मैणोमदः ॥

काश्मीरं रसबंगलोहगगनं प्रत्येक शाणोन्मितम् ।
बश्वंशोन्मदनीयया विलुलितं श्वेता च तुर्भागिका ॥
पाकोऽयं मदवीर्यकान्ति दहन धिक्यादिनातोषकृत् ।
वातव्याधिविनाशनो रतिरणक्षीणा मयोद्धारणः ॥

इतिद्वीपाश्वपाकः ॥

## लवंग पाकः

लवंगंप्रस्थमेकंतु पचेत्क्षीरे चतुर्गुणे ।
घृतं च कुडवं दद्यात्सिता प्रस्थंतथैच ॥
कटुत्रयं चतुर्जातं जाती पत्री च कुंकुमम् ।
कर्पूरेक्षुरबीजं च जातीफलकहाटकम् ॥
कृष्णागुरु च वांशी च कंकोलं कुंदुरुस्तथा ।
कवावांबुधिशोषं फणिफेनं च चंदनम् ॥
अभ्रकं लोहबंगस्य प्रत्येकं कर्ष संमितम् ।
विजयाकुडबं दद्यात्सर्वमेकत्र चूर्णयेत् ॥
भक्षयेत्कर्षमात्रं च जरापलित नाशनम् ।
वीर्यस्तम्भकरं पुंसां सर्वमेहहरं तथा ॥
ग्रहणीरुगती सारवन्हिमांद्य बलक्षयम् ।
नाशयेत्सेवनादेष लवंगाख्यरसायनम् ॥

इति लवंगपाकः ॥

भैरवी हरीतकी

पात्र मात्रं शिवां पुष्टां शुभांच परियोजयेत् ।
दशांघ्रि पंच कोलं च पौष्करं हपुषाशटीं ॥
नाग दीप्य वला कौंती शृंगीराला पुनर्नवा ।
प्रत्येकं प्रस्थ मानंतु द्रोणे चैवशुभोदके ॥
मृदु वह्नौ च संस्वेद्यपश्चा त्त्र्यस्थी कृता शिवा ।
कटुषट कक्षार युगं पंचैव लवणानिच ॥
वराम्लदा डिमंक्षारं बृक्षाम्लं जीरकद्वयं ।
यवानीचाजमोदाच पौष्करं हपुषाशटी ॥
कुस्तुंवरी लवंगं च कर्षाधंकारयेत्सुधीः ।
चूर्ण पूर्णाशिवा कार्यास्तंतुभिः परिवेष्टितं ॥
लुंग निंबू रसे मग्ना शिवा वासर सप्तकं ।
शिवा मेकांनरो भक्षेद्वह्नि मांद्ये सुदारुणे ॥
उग्दाराक्षेपकेवाते गुल्म शूले तथोदरे ।
क्रूर कोष्टतथाध्मानेत्यजीर्णे वध्मं रोगिणि ॥
कासेश्चा सेवला सेच प्लीहानाह विबंधके ।
भैरवेण समाख्याताततः साभैरवी शिवा ॥

इति भैरवी हरीतकी

मधुपक्व हरीतकी

दशमूल कण वाह्नि कपित्थं च विभीतकं ।
कंकोलं मरिचं विश्वामूलं पिप्पलिसंभवं ॥

रक्त रोहितकं दंती द्राक्षा जाती निशाद्वयं।
धात्री जंतुघ्न शिखरी शृंगी दारु पुनर्नवाः॥
धान्यकं देवकुसुमं राज वृक्ष त्रिकंटकं।
वृहत्याश्वकुवेराक्षोमूलं वारण संभवं॥
एतेषां बल युग्मं तुभेष जानां पृथक् पृथक्।
आढकं चात्र पथ्याया द्रोणे पां शनकैः पचेत्॥
स्विन्ना पथ्या भवेद्यावत् शूलैः संछिद्य यत्नतः।
बहु छिद्रांशिवां कृत्वा पश्चान्मधुनि निक्षिपेत्॥
मज्जनार्हे ततः पंच दिनं तस्मात्समुद्धरेत्।
पुनः क्षिपेत्पंचदिनं पुनस्तस्मात्समुद्धरेत्॥
मधु मध्येपुनः क्षिप्त्वास्थापयेद्यत्नतः शिवाः।
चातुर्जातक कृष्णानां चूर्णमष्टपलोन्मितं॥
लवंगै लात्वचांचैव तन्मध्ये निक्षिपेद्भिषक्।
सिद्धा हरीतकी चैषा धन्वंतरि समीरिता॥
भक्षयेद्योनरोनित्यं रोगानी कनिवृत्तये।
कासं श्वासं क्षयं हिकांछर्दि मूर्छामद भ्रमं॥
मुख शोषं तथा तृष्णामा नाहं वह्नि मंदतां।
विकृतिं मुदराणां च जीर्णं च विषमं ज्वरं॥
मूत्र कृछ्रं प्रमेहांश्च वात रक्तं सुदारुणं।
शिरोक्षि कर्णजां पीडांतथा वंन्ध्यागुदोद्भवं॥
ग्रहणीं दुर्निवारांच शोष दोष त्रयोद्भवं॥

रक्त पित्तं श्लेष्म पित्तं शोफं दद्रुं विचर्चिकं ।
कुष्टान्यर्शांस्यपस्मारं पांडु रोगंश्चकामलं ॥
मधु पक्वे तिविख्याताश्चर्वं रोग बिनाशिनी ।

इति मधु पक्क हरीतकी

हरीतक्यवलेहः

सुपक्व पथ्याः खलु पंचपालिकाः कंसेप्रपाच्यै वशुभार नाले ।
नतंस्तु निष्कोष्य हरीतकी नांमध्येत्तिपेच्चूर्णमिदं पलार्धं ॥
सत्र्यूषणं सैंधव चित्रकंच ।
सजीरकं पिप्पलि मूल चव्यं ॥
ततः त्तिपेदार्द्रकबीज पूर निंबूरसेताश्चनिमज्जयेत्पुनः ।
संसे बिताश्च कफ रोग जातं समस्त शूलं जठरांश्च बृद्धिं ॥
तूणी प्रतूणी ग्रहणी गुदोत्थान रोचक लीह गरं विषं च ।
आमवातमुदावर्त्तमष्टी लाध्मान नाशिनी ॥
अजीर्णं च विसूचिंच हंति नात्र विचारणा ।

इति हरीतक्यवलेहः

धनंजय हरीतकी

रत्तयेद्त्रिदिनं मूत्रेगवां गुर्वीं हरीतकी ॥
तक्रे सुरभिजे सम्यक् ततोयुक्त्यापचेत्सुधीः ॥
ततोदशाग्निनिर्यूहे पक्त्वाव्यंग्थी कृतां पुनः ।
बिडादि चूर्णैः संपूर्य सूत्रै र्वेष्ट्य निमज्जयेत् ॥
पक्वा निंबू फल रसे धनंजय हरीतकी ।
प्रत्यहं भत्तयेदेकां पथ्या शीत भुजः सदा ॥
वर्धनी जाठरस्याग्निरामाती सार पाचनी ।

॥ इति धनं जय हरीतकी ॥

क्षार हरीतकी

हरीतक्या: पलशतं गोमूत्रे कांजिके तथा ।
चतुर्गुणे पचेत्पश्चात्समुद्धृत्य विशोषयेत् ॥
निष्कुली कृत युक्त्याताश्चूर्णेनानेन पूरयेत् ।
त्रिकटुत्रयवक्षारं सैंधवं चव्य चित्रकं ॥
सामुद्र मौद्भिदं चैवदीप्यकं ग्रंथिकं तथा ।
रामठंच कुबैराद्यं चूर्णं कृत्वा समांशकं ॥
विजया पूरयेत्तेन दृढं सूत्रेण वेष्टयेत् ।
संस्थाप्य काच पात्रेच पूरयेन्निबूक द्रवे ॥
सिद्धांतां भक्षयेत्प्रात: देश कालाद् पेक्षया ।
आमवातं हनुस्तंभं मन्यास्तंभं प्रलग्रहे ॥

॥ इति क्षार हरीतकी ॥

कांजिक हरीतकी

हरीतकीश्च सुस्विन्ना:कांजिकेशनकै:शुभा: ।
सर्वाश्चनिष्कुली कृत्य विडेनापूरयेत्तत: ॥
लवंग व्योष चोचैला जाती कोशाग्नि चूर्णत: ।
निंबूफल रस क्षिप्त्वा खादेत्पंचाहत: परं ॥
वाताष्टीलांहरेद्गुल्मं पांडु मेह क्षयोदरान् ।
शूलंच ग्रहणी दोषं मर्शांस्यग्नि बधंतथा ॥

इति कांजिक हरीतकी ।

तक्र हरीतकी

द्विकंसेतक्रस्यद्वि कुडवपटो: षष्टिमभया ।
पचेदव्य स्थीसार्धंघृत बिजल शुंठीद्वि कुडवै: ॥

छमाबाप्या जाती मारक इपला दीप्यं कनलं ।

जिह्वं भ्रष्टं वह्नि जनयति च हन्ति महाशिका ॥ ८ ॥

॥ इति तक्र हरीतकी

मधुपक्क हरीतकी

समंगा कटुका मुस्तां कुट उत्वकपलं तथा ।

रजनी युग्मचानंता अमृता बृहती युगं ॥

राजीफला वराविश्वागायत्री दारुवल्कलं ।

भूनिंबारिष्ट निंबत्वक् महा निंबत्वचावरी ॥

चंदनारग्वधश्यामा पूतिकं वरुणोमिशी ।

मधाम्लवेत संकुष्ठं विशाला सारिवा युगं ॥

पयोद पर्पटं पाथ त्रायमाणा च बोलकं ।

अंकोलत्वक् चित्रकं च प्रत्येकं पलसंमितं ॥

जल द्रोणे पचेत्सम्यक् शत पथ्या यथा मृदु ।

कषाये पाचितांस्त्रिशालीद्दण कंटैः सुवेधितां ॥

माक्षिके मज्जयेत्ताश्च सप्तरात्रात्समुद्धरेत् ।

सप्तरात्रा ततो आहाभक्षणार्थं यथाबलं ॥

यथाग्नि भक्षयेदेकामर्धां वा प्रातरेव ना ।

द्विकालं, वा व्याधि बलात् यथा कालं यथा बलं ॥

मधु पक्वेति विख्याता पथ्या पथ्याद्वि सर्वतः ।

अतिसारं च विविधि ग्रहणी च प्रवाहिका ॥

आम शूलं वह्नि मांद्यं रक्तपित्तं त्वयं ज्वरं ।

अष्टादश च कुष्टानित्वग्विकारान शेषतः ॥

इति मधुपक्क हरीतकी ।

रसरत्नाकरान्तर्गतं

## वादिखंडः ऋद्धिखंडः ।

यह पारदीय संस्कारों का विधायक और रसायनवा[illegible] समर्थक बहुत ही उपयोगी ग्रन्थ है इसीमें धूमबेध, शब्दवेध, स्[illegible] बेध, गिरि और पृथ्वीभेद पारद के निर्माण प्रकार हैं। आयुर्वेद साहित्य में ऐसा ग्रन्थ अब तक न था यह एक प्राथमिक ग्रन्थ है संस्कृत मूल मात्र है [illegible])



## मुकुन्दलीलामृत नाटकम्

श्रीकृष्ण की लीलाओं का बहुतही भावमय और हिन्दी कवियोंकी सारग्राही सूक्तियोंका तथा हिन्दी कवियों द्वारा वर्णित. मान पनघट गौदोहन मान आदि लीलाओंका संस्कृत गद्यपद्यमय वाङ्मय है संस्कृत भाषा के शौकीनों के लिये यह अभूत पूर्व ग्रन्थ रत्न है जिन्हें, सामयिक सुभाषित सूक्ति नीति का शौक हो वह पढ़कर अपने हृदय को सुखी बना सके हैं [illegible]) सैकड़ों प्रशंसा पत्र प्राप्त हैं।

**मैनेंजर—श्रीहरिहर औषधलय**

बरालोकपुर इटावा यू० पी०

श्रीहरिहर प्रेस, बरालोकपुर इटावा में मुद्रित।